॥ अथसीमंलोन्नयनप्रयोगःप्रारंभः क्राद्विनाथलल्लस्पास्पपत्राणि ॥ ३ ॥

सीमंतोनयनप्रयोग॥

॥१॥

श्रीगणेशाय नमः॥ अथ सीमंतोनयनप्रयोगः॥ चतुर्थे षष्ठे अष्टमे नवमे वा यावद्गर्भविमोचनं तावत्पर्यंते काले
काले शुक्लपक्षे असंभवे आंत्यांशरहिते कृष्णपक्षे चतुर्थीषष्ठ्यष्टमीनवमीद्वादशीचतुर्दश्यमावास्यारिक्तति
थीएतदसंभवे चतुर्दशीचतुर्थ्यष्टमीनवमीषष्ठीद्वादशीनां क्रमेण पंचाष्टौ चतुर्दश पंचविंशतिः॥ नवदशेति
आद्याघटिकाः साधारण्येन दशघटिका वा विवाहाय तास्वपि रविभौमगुर्वन्यतमे वासरे संकटे सोमभृग्वन्यत
रेपि वासरे रोहिणीमृगशिरःपुनर्वसूपुष्यहस्तोत्तरात्रयरेवतीश्रवणान्यतमे अभिजित्प्रोष्ठपदानूराधाश्विनी
मूलनक्षत्रे कर्कसिंहकन्याव्यतिरिक्ते लग्ने दिवैव कार्यं॥ नाचगुरुशुक्रास्तमलमासादिनिषेधः॥ यजमानः कृता
वश्यककृत्यः॥ वस्त्राच्छादिते पीठे प्राङ्मुख उपविश्य स्वदक्षिणतः पत्नीमुपवेश्य॥ आचम्य प्राणानायम्य देश ॥१॥
कालौ संकीर्त्य मम अस्यां भार्यायां बैजिकगार्भिकदोषपरिहारद्वारा क्षेत्रसंस्कारद्वारा च श्रीपरमेश्वरप्रीत्यर्थं
सीमंतोनयनाख्यं कर्म करिष्ये॥ तदंगं गणपतिपूजनं पुण्याहवाचनं मातृकापूजनं नांदीश्राद्धं च करिष्ये॥ इति ॥शंकर॥

संकल्प्य॥ उक्तरीत्या कुर्यात्॥ ततः सीमंतोनयनांगत्वेन उद्धननादिकर्म करिष्ये॥ इति संकल्प्य उद्धननादिभूसंस्कारं
विधाय तत्र मंगलनामानमग्निं प्रतिष्ठाप्य॥ आयतने परिसमूहनादि कृत्वा॥ समित्त्रयमादाय अद्रुहि सत्येन त्वाह्या
मीत्यादिसामान्यप्रधानां तु हुत्वा॥ प्रधानहोमे॥ धातारं चतुराज्येन॥ अं हौं गं ह्मे॥ वरुणं द्विरित्यादि॥ पात्रासादने॥
दर्वीं आज्यस्थालीं प्रणीतां प्रोक्षणीं इध्मं बर्हिः उपवेषं संमार्गदर्भान्॥ अवज्वलनदर्भान्॥ आज्यं चासादयामि॥
पवित्रकरणादिसामान्यप्रधानांतं हुत्वा॥ प्रधानहोमः॥ ॐ धाता ददातु नो रयिमीशानो जगतस्पतिः॥ स नः पूर्णे
नवावनत्स्वाहा॥ धात्र इदं०॥ ॐ धाता प्रजाया उत राय ईशे धातेदं विश्वं भुवनं जजान॥ धाता पुत्रं यजमानाय दाता
तस्मा उ हव्यं घृतवद्विधेम स्वाहा॥ धात्र इदं०॥ ॐ धाता ददातु नो रयिं प्राचीं जीवातुमक्षितां॥ वयं देवस्य धीमहि
सुमतिं सत्यराधसः स्वाहा॥ धात्र इदं०॥ ॐ धाता ददातु दाशुषे वसूनि प्रजाकामाय मीढुषे दुरोणे॥ तस्मै दे
वा अमृताः संव्ययंतां विश्वेदेवासो अदितिः सजोषाः स्वाहा॥ धात्र इदं०॥ इति प्रधानाहुतिचतुष्टयं हुत्वा॥ संस्था

नयनप्रयो॰ ॥२॥

जपांतं समाप्य ॥ त्रिरदन्महोमं कुर्यात् ॥ त्रिरदन्महोम दोषादिना ब्राह्मणान्संतोष्य तान्पुण्याहं वाचयेत् ॥ यत्पुण्यं नक्षत्रमभि
त्यादि प्रजापतिः प्रीयतामित्यंतं वदेत् ॥ ततः कर्ता अपरेणाग्निं उपरिबद्धवस्त्रविताने देशे भार्यां प्राङ्मुखीमुपवेश्य तस्
याः दक्षिणहस्ते यवं निदधाति ॥ यवोसीति सकृदुक्तेन मंत्रेण यवस्य दक्षिणत उत्तरतश्च सर्षपं निदधाति ॥ आंडौ स्थ
इति तदुपरि गव्यं निदधाति ॥ श्वात्रस्थ दिति ततस्तूष्णीं प्राशयति ॥ ततः कृताचमनायास्तस्या उदरं हस्ताभ्यामभिमृश
ति ॥ आभिष्ट्वाहं दशभिरभिमृशामि दशमास्याय सूतवे ॥ इति ॥ अथ न्यूनांगुलोत्सु कर्तु दर्भाभिरिति ॥ पदं श्रते ॥ स्मार्त
स्तु पस्थाने गार्हपत्यपदलोपवत् ॥ ततो वटांकुरं प्रपीड्य रसं निष्कास्य तेन संमितं कृत्वा कृतं स्वोरुमूलोपधानाया स्त
स्या दक्षिणेनासिकाछिद्रे प्रणयेत् ॥ मंडलवितानस्याधः प्राङ्मुखीमुपवेश्य त्रैण्याल्या उदुंबरस्तबकमुपसंगृह्य ॥२॥
तस्याः पुरस्तात्प्राङ्मुखस्तिष्ठन्सीमंतमुन्नयति ॥ ॐ भूर्भुवः स्वः ॥ राकामहं सुहवां सुष्टुती हुवे शृणोतु नः सुभ
गा बोधतु त्मना ॥ सीव्यत्वपः सूच्याच्छिद्यमानया ददातु वीरं शतदायमुक्थ्यं ॥ यास्ते राके सुमतयः सुपेशसो या ॥शंकर॥

भिर्ददासि दाशुषे वसूनि ॥ ताभिर्नो अद्य सुमना उपागहि सहस्रपोषं सुभगे रराणा ॥ इति द्वाभ्यां ततः सीमंतमुन्न
यति ॥ सोम एव नो राजेत्याहुर्ब्राह्मणीः प्रजा विवृत्तचक्रा आसीनास्तीरेण तुभ्यं गंगे ॥ विश्वा उत त्वया वयं धारा उदन्या इव ॥
अतिगाहेमहि द्विष इति ॥ अत्र मंत्रस्थं गंगपदं त्यक्त्वा पत्न्यास्तया: समीपनिवासस्तन्नाम संबुध्यंतं क्षिपेत् ॥ ततो ब्राह्मण
भोजनं भूयसीं दक्षिणां संकल्प्य दद्यात् ॥ ततः आशिषो वाचयित्वा ॥ कर्मसाद्गुण्याय विष्णुं स्मरेत् ॥ इति सीमंतोन्नयनप्र
योगः ॥ अथ पुंसवनसीमंतयोः तंत्रेण प्रयोगः ॥ देशकालौ संकीर्त्य मम अस्यां भार्यायां विद्यमानगर्भस्य बीजगर्भसमुद्भ
वैनोनिबर्हणद्वारा क्षेत्रसंस्कारद्वारा च श्रीपरमेश्वरप्रीत्यर्थं पुंसवनसीमंतोन्नयने तंत्रेण करिष्ये ॥ इति संकल्प्य पुंसवनसी
मंतोन्नयनकर्मणोरित्यन्वाधानं गणेशपूजनं त्रिरदन्महोमं पुण्याहवाचनांतं सर्वं सकृदेव कुर्यात् ॥ संप्रतिपंनदेवतारूप
हृदेशोषिक्षप्राची चलतु एहोमस्यापि ना शक्ति ॥ भार्यायाः मंडलवितानस्याधो देशोपवेशनं दधि द्रप्स सीमंतोन्नयनादिकं च पृथक्पृ
थक् कुर्यात् ॥ समाप्तः ॥ श्रीहरिहरेश्वरार्पणमस्तु ॥ शके १८०४ कार्तिके शुक्ल १ लेले इत्युपनामकेन काशीनाथेन लिखितं ॥

